# अथ नपरप्रकरणम् ३

नत्वा नारायणं देवं सर्वसम्पत्करं परम्
शौरिसूनुः प्रवक्ष्यामि नवं नवपरं परम् १
दुर्ज्ञानं दुष्पठं यत्तु सापेक्षञ्चाक्रमन्तथा
तत्परित्यज्य सव्याख्यम् अकारादि च पुष्कलम् २
नारम्भणीयमेतच्च स्वत एव व्यवस्थितेः
प्रसिद्धाध्ययनात्तत्र केचित्सन्दिहते क्वचित् ३
कुतोऽवसीयते कैश्चित् निपुणैश्च महात्मभिः
निश्चितं स्वानुरूपेण लक्षणेनावसीयते ४
चादौ विकारी नो ने तः पदान्तो विषयोऽस्य सः
अभिधेयौ च तावेव तज्ज्ञानं च प्रयोजनम् ५
चछजेषु तवर्गीये थकारेण विवर्जिते
चतुष्टये मकारे च लकारे च परे स्थिते ६
विकारी नः पदान्तो यः तकारो नपरश्च यः
दृश्यते येषु तौ ज्ञातुं प्रवक्ष्यामि पदान्यहम् ७
नानापदत्वमिङ्ग्यान्तमिष्यते चात्र लक्षणे
ह्रस्वोपधमनिङ्ग्यम् यत् तपरन्नीचमेव तत् ८
नागमञ्च शकेयञ्चाप्यचारिषमथाशकम्
श्रयध्वमेनमित्येतत्पदषट्कम् विधीयते ९
नकारान्तं पदं पूर्वम् अकारादि क्रमेण तु

तकारान्तं ततोऽनेन क्रमेणैव च गृह्यते १०

इति परिभाषा

अमुष्मिन्नब्रुवन्नस्मिन्ननड्वानसुरानपि

अकुर्वन्नवसन्नक्रन्ननयन्नदुहंस्तथा १

अधुक्षन्निदयन्नश्मन्नक्रीणन्नविशन्नपि

अवाजिगा□सन्नवायन्नभूवन्नभरन्नपि २

अनानशिक्षन्नवदन्नहेडन्नभवन्नपि

अगन्नजातानक्रामन्नचिन्वन्नदृशंस्तथा ३

अवेशयन्नगायंश्चाप्यविन्दन्परिगृह्यते

अदभ्नुवन्नगृह्वंश्चाप्यजानन्नजयन्नपि ४

मपरं नाप्यथापश्यञ्जपरम्प्रतिषिध्यते

अस्मान्नह्येवपूर्वं स्यादायुष्मान्नार्ध्नुवन्नपि ५

आसन्नात्मन्नथाश्वत्थानादित्यानप्यथो भवेत्

आरण्यानप्यथायन्थ्स्यादासीरन्नाचिकीर्षन्न् ६

इमाल्लँपरमीडेन्यानूषानेष्यन्नपीष्यते

एतस्मिन्नेव चैनान्त्रिर्देवलोकेनुदे परे ७

एताञ्जमपरञ्चैवमैरयन्नोमनित्यथ

कपालान्क्रयणान्कल्पान्गरुत्मांश्च गृहान्गणान् ८

गृह्णन्वलगान्घृणीवाञ्चक्षुष्मांश्चकृवांस्तथा

चर्मञ्जमञ्जग्मिवाञ्जानञ्जनयञ्जन्मन्त्मन्नपि ९

त्यान्तिष्ठेरन्तुविष्मान्त्रीन्तिष्ठन्तूर्वन्तपन्नपि
तस्मिन्निति पदञ्चात्र लक्षणे स्फुटमिष्यते १०
छन्दो देवांश्च मे देवा द्वाभ्यां दक्षिणतो न निः
तानित्येषु परेष्वेवाचिकीर्षन्तान्तु वर्जयेत् ११
देवान्दन्द्यूंश्च दीक्षेरन्भागधान्धारयन्नपि
धन्वन्धीन्सोमपान्पत्मन्पश्यन्पुण्यांश्च पार्थिवान् १२
पापीयांश्च प्रघासांश्च पुरोडाशान्पशून्पितॄन्
ब्रह्मान्भद्रांश्च भान्भासन्भृज्वान्भूयानिहोच्यते १३
भ्रातृव्यांश्च मनस्वांश्च मण्डूकांश्च महानपि
मुञ्चन्म्रोचन्मलिम्लूंश्च मारुतान्मधुमानपि १४
मनुष्यानपि यस्मिंश्च युच्छन्नपि पदेनयन्न्
परायन्नपरोयांश्च राजन्दिव इतीरितम् १५
रुद्राल्लोँकान्विदन्पन्थिनः पूर्वं वन्वरानपि
वर्ष्मन्विद्वान्वसून्वारान्वीरान्मा वारुणानपि १६
वानिङ्ग्यान्तञ्च विश्वांश्च देवान्परमितीरितम्
शत्रूञ्छर्मघ्नुश्रुवांश्च शीर्षन्दपरमिष्यते १७
सामन्थ्सुब्धान्थ्सरस्वांश्च निषीदन्थ्सूर्य एष सन्न्
सन्निस्सञ्जायसे स्फूर्जन्थ्सर्वान्थ्सर्पांश्च निश्चितम् १८
स्तेगान्थ्सहीयान्हविष्मान्होमानिति नपद्धतिः १८-२
इति नपरप्रक्रणम ३